मू. (५२५) सीहासणे निविट्ठो सक्कीसाणा य दोहि पासेहिं ।
वीयति चामराहिं मणिरयणविचित्तदंडाहिं ॥

मू. (५२६) पुव्विं उक्खित्ता माणुसेहिं साहट्ठु रोमकूवेहिं ।
पच्छा वहंति देवा सुरअसुरा गरुलनागिंदा ॥

मू. (५२७) पुरओ सुरा वहंती असुरा पुण दाहिणंमि पासंमि ।
अवरो वहंति गरुला नागा पुण उत्तरे पासे ॥

मू. (५२८) वणसंडं व कुसुमियं पउमसरो वा जहा सरयकाले ।
सोहइ कुसुमभरेणं इय गगणयलं सुरगणेहिं ।

मू. (५२९) सिद्धत्थवणं व जहा कणयारवणं व चंपयवणं वा ।
सोहइ कु० ॥

मू. (५३०) वरपडहभेरिझल्लरिसंखसयसहस्सिएहिं तूरेहिं ।
गयणयले धरणियले तूरनिनाओ परमरम्मो ॥

मू. (५३१) ततविततं घणझुसिरं आउज्जं चउव्विहं बहुविहीयं ।
वाइंति तत्थ देवा बहूहिं आनट्टगसएहिं ॥

मू. (५३२) तेणं कालेणं तेणं समएणं जे से हेमंताणं पढमे मासे पढमे पक्खे मग्गसिरबहुले तस्स णं मग्गसिरबहुलस्स दसमीपक्खेणं सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं हत्थुत्तरानक्खत्तेणं जोगोवगएणं पाईणगामिणीए छायाए विइयाए पोरिसीए छट्ठेणं भत्तेणं अपाणएणं एगसाडगमायाए चंदप्पभाए सिबियाए सहस्सवाहिणियाए सदेवमणुयासुराए परिसाए समणिज्जमाणे उत्तरखत्तियकुंडपुरसंनिवेसस्स मज्झंमज्झेणं निगच्छइ २ ।

—जेणेव नायसंडे उज्जाणे तेणेव उवागच्छइ २ ईसिं रयणिप्पमाणं अच्छोप्पेणं भूमिभाएणं सणियं २ चंदप्पभं सिवियं सहस्सवाहिणिं ठवेइ २ सणियं २ चंदप्पभाओ सीयाओ सहस्सवाहिणीओ पच्चोयरइ २ सणियं २ चंदप्पभं सिबयं सहस्सवाहिणिं ठवेइ २ सणियं २ चंदप्पभाओ सीयाओ सहस्सवाहिणीओ पच्चोयरइ २ सणियं २ पुरत्थाभिमुहे सीहासणे नीसीयइ आभरणालंकारं ओमुअइ,

—तओ णं वेसमणे देवे भत्तुव्वायपडिओ भगवओ महावीरस्स हंसलक्खणेणं पडेणं आभरणालंकारं पडिच्छइ,

—तओ णं समणे भगवं महावीरे दाहिणेणं दाहिणं वामेणं वामं पंचमुट्ठियं लोयं करेइ,

—तओ णं सक्के देविंदे देवराया समणस्स भगवओ महावीरस्स जन्नवायपडिए वइरामएणं थालेण केसाइं पडिच्छइ २ अणुजाणेसि भंतेत्ति कट्टु खीरोयसागरं साहरइ ।

तओ णं समणे जाव लोयं करित्ता सिद्धाणं नमुक्कारं करेइ २ सव्वं मे अकरणिज्जं पावकम्मंतिकट्टु सामाइयं चरित्तं पडिवज्जइ २ देवपरिसं च मणुयपरिसं च आलिक्खचित्तभूयमिव ठवेइ ।

मू. (५३३) दिव्वो मणुस्सघोसो तुरियनिनाओ य सक्कवयणेणं ।
खिप्पामेव निलुक्को जाहे पडिवज्जइ चरित्तं ।

मू. (५३४) पडिवज्जित्तु चरित्तं अहोनिसं सव्वपाणभूयहियं ।
साहट्ठु लोमपुलया सव्वे देवा निसामिंति ॥

**मू. (५३५)** तओ णं समणस्स भगवओ महावीरस्स सामाइयं खओवसमियं चरित्तं पडिवन्नस्स मनपज्जवनाणे नामं नाणे समुप्पन्ने अड्ढाइज्जेहिं दीवेहिं दोहि य समुद्देहिं सन्नीणं पंचिंदियाणं पज्जत्ताणं वियत्तमणसाणं मणोगयाइं भावाइं जाणेइ ।

—तओ णं समणे भगवं महावीरे पव्वइए समाणे मित्तनाइं सयणसंबंधिवग्गं पडिविसज्जेइ, २ इमं एयारूवं अभिग्गहं अभिगिण्हइ-बारस वासाइं वोसट्ठकाए चियत्तदेहे जे के उवसग्गा समुप्पज्जंति ।

—तंजहा—दिव्वा वा माणुस्सा वा तेरिच्छिया वा, ते सव्वे उवसग्गे समुप्पन्ने समाणे सम्मं सहिस्सामि खमिस्सामि अहिआसइस्सामि,

—तओ णं स० भ० म० वोसिट्ठचत्तदेहे अनुत्तरेणं आलएणं अनुत्तरेणं विहारेणं एवं संजमेणं पग्गहेणं संवरेणं तवेणं बंभचेरवासेणं खंतीए मुत्तीए समिईए गुत्तीए तुट्ठीए ठाणेणं कमेणं सुचरियफलनिव्वाणमुत्तिमग्गेणं अप्पाणं भावेमाणे विहरइ, एवं वा विहरमाणस्स जे केइ उवसग्गा समुप्पज्जंति-दिव्वा वा माणुस्सा वा तिरिच्छिया वा, ते सव्वे उवसग्गे समुप्पन्ने समाणे अनाउले अव्वहिए अद्दीनमानसे तिविहमणवयणकायगुत्ते सम्मं सहइ खमइ तितिक्खइ अहियासेइ,

—तओ णं समणस्स भगवओ महावीरस्स एएणं विहारेणं विहरमाणस्स बारस वासा वीइक्कंता तेरसमस्स य वासस्स परियाए वट्टमाणस्स जे से गिम्हाणं दुच्चे मासे चउत्थे पक्खे वइसाहसुद्धे तस्स णं वेसाहसुद्धस्स दसमीपक्खेणं सुव्वएणं दिवसेणं विजएणं मुहुत्तेणं हत्थुत्तराहिं नक्खत्तेणं जोगोवगएणं पाईणगामिणीए छायाए वियत्ताए पोरिसीए जंभियगामस्स नगरस्स बहिया नईए उज्जुवालियाए उत्तरकूले सामागस्स गाहावइस्स कट्ठकरणंसि उड्ढंजाणूअहोसिरस्स झाणकोट्ठोवगयस्स वेयावत्तस्स चेइयस्स उत्तरपुरच्छिमे दिसीभागे सालरुक्खस्स अदूरसामंते उक्कुडुयस्स गोदोहियाए आयावणाए आयावेमाणस्स छट्ठेणं भत्तेणं अपाणएणं सुक्कज्झाणंतरियाए वट्टमाणस्स निव्वाणे कसिणे पडिपुन्ने अव्वाहए निरावरणे अनंते अनुत्तरे केवलवरनाणदंसणे समुप्पन्ने,

—से भगवं अरहं जिणे केवली सव्वन्नू सव्वभावदरिसी सदेवमणुयासुरस्स लोगस्स पज्जाए जाणइ ।

तं०—आगइं गइं ठिइं चयणं उववायं भुत्तं पीयं कडं पिडसेवियं आविकम्मं रहोकम्मं लवियं कहियं मणोमाणसियं सव्वलोए सव्वजीवाणं सव्वभावाइं जाणमाणे पासमाणे एवं च णं विहरइ, —जण्णं दिवसं समणस्स भगवओ महावीरस्स निव्वाणे कसिणे जाव समुप्पन्ने तण्णं दिवसं भवणवइवाणमंतरजोइसियविमाणवासिदेवेहि य देवीहि य उवयंतेहिं जाव उप्पिंजलगभूए यावि हुत्था, तओ णं समणे भगवं महावीरे उप्पन्नवरनाणदंसणधरे अप्पाणं च लोगं च अभिसमिक्ख पुव्वं देवाणं धम्ममाइक्खइ, ततो पच्छा मणुस्साणं,

—तओ णं समणे भगवं महावीरे उप्पन्ननाणदंसणधरे गोयमाईणं समणाणं पंच महव्वयाइं सभावणाइं छज्जीवनिकाया आतिक्खति भासइ परूवेइ, तं-पुढविकाए जाव तसकाए,

**मू. (५३६)** पढमं भंते ! महव्वयं पच्चक्खामि सव्वं पाणाइवायं से सुहुमं वा बायरं वा तसं वा थावरं वा नेव सयं पाणाइवायं करिज्जा ३ जावज्जीवाए तिविहं तिविहेणं मणसा वयसा कायसा

तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि, तस्सिमाओ पंच भावणाओ भवंति। तत्थिमा पढमा भावणा–

वृ. –'तेणं कालेणं'मित्यादि 'तेन कालेन' इति दुष्षमसुषमादिना 'तेन समयेन' इति विवक्षितेन विशिष्टेन कालेन सतोत्पत्त्यादिकमभूदिति सम्बन्धः।

तत्र 'पंचहत्थुत्तरे यावि हुत्था' इत्येवमादिना 'आरोग्गा आरोग्गं पसूय'त्ति, इत्येवमन्तेन ग्रन्थेन भगवतः श्रीवर्द्धमानस्वामिनो विमानच्यवनं ब्राह्मणीगर्भाधानं ततः शक्रादेशात् त्रिशलागर्भसंहरणमुत्पत्तिश्चाभिहिता।

'तत्थ' पंचहत्थुत्तरेहिं होत्थ'त्ति हस्त उत्तरो यासामुत्तरफाल्गुनीनां ता हस्तोत्तराः, ताश्च पञ्चसु स्थानेषु-गर्भाधानसंहरणजन्मदीक्षाज्ञानोत्पत्तिरूपेषु संवृत्ता अतः पञ्चहस्तोत्तरो भगवानभूदिति, 'चवमाणे न जाणइ'त्ति आन्तर्मुहूर्त्तिकत्वाच्छद्मस्थोपयोगस्य च्यवनकालस्य च सूक्ष्मत्वादिति, तथा 'जण्णं रयणी अरोया अरोयं पसूयन्ती'त्येवमादिना।

'उप्पन्ननाणदंसणधरे गोयमाईणं समणाणं निग्गंथाणं पञ्च महव्वयाइं सभावणाइं छज्जीवनिकायाइं आइक्खइ'त्येवमन्तेन ग्रन्थेन भगवतो वीरवर्द्धमानस्वामिनो जातकर्माभिषेक-संवर्धनदीक्षाकेवलज्ञानोत्पत्तयोऽभिहिताः।

प्रकटार्थं च सर्वमपि सूत्रं,

साम्प्रतमुत्पन्नज्ञानेन भगवता पञ्चानां महाव्रतानां प्राणातिपातविरमणादीनां प्रत्येकं याः पञ्च पञ्च भावनाः प्ररूपितास्ता व्याख्यायन्ते।

तत्र प्रथममहाव्रतभावनाः पञ्च, तत्र प्रथमां तावदाह-

मू. (५३६–वर्तते) इरियासमिए से निग्गंथे नो अणइरियासमिएत्ति, केवली बूया०–अणइरियासमिए से निग्गंथे पाणाइं भूयाइं जीवाइं सत्ताइं अभिहणिज्ज वा वत्तिज्ज वा परियाविज्ज वा लेसिज्ज वा उद्दविज्ज वा, इरियासमिए से निग्गंथे नो इरियाअसमिइत्ति पढमा भावना।

अहावरा दुच्चा भावना–मणं परियाणइ से निग्गंथे, जे य मणे पावए सावज्जे सकिरिए अण्हयकरे छेयकरे भेयकरे अहिगरणिए पाउसिए पारियाविए पाणाइवाइए भूओवघाइए, तहप्पगारं मणं नो पधारिज्जा गमणाए, मणं परिजाणइ से निग्गंथे, जे य मणे अपावएत्ति दुच्चा भावना।

अहावरा तच्चा भावना–वइं परिजाणइ से निग्गंथे, जा य वई पाविया सावज्जा सकिरिया जाव भूओवघाइया तहप्पगारं वइं नो उच्चारिज्जा, जे वइं परिजाणइ से निग्गंथे, जाव वइ अपावियत्ति तच्चा भावना।

अहावरा चउत्था भावना–आयाणभंडमत्तनिक्खेवणासमिए से निग्गंथे, नो अणायाणभंडमत्तनिक्खेवणासमिए, केवली बूया०–आयाणभंडमत्तनिक्खेवणाअसमिए से निग्गंथे पाणाइं भूयाइं जीवाइं सत्ताइं अभिहणिज्जा वा जाव उद्दविज्ज वा, तम्हा आयाण-भंडमत्तनिक्खेवणासमिए से निग्गंथे, नो आयाणभंडनिक्खेवणाअसमिएत्ति चउत्था भावना

अहावरा पंचमा भावना–आलोइयपाणभोयणभोई से निग्गंथे नो अणालोइय-पाणभोयणभोई, केवली बूया०–अणालोईयपाणभोयणभोई से निग्गंथे पाणाणि वा ४ अभिहणिज्ज वा जाव उद्दविज्ज वा, तम्हा आलोइयपाणभोयणभोई से निग्गंथे नो अणालोईय- पाणभोयणभोईत्ति पंचमा भावना।

*एयावता महव्वए सम्मं काएण फासिए पालिए तीरिए किट्टिए अवट्ठिए आणाए आराहिए यावि भवइ, पढमे भंते ! महव्वए पाणाइवायाओ वेरमणं ॥*

**वृ.** 'इरिया समिए' इत्यादि, ईरणं गमनमीर्या तस्यां समितो-दत्तावधानः पुरतो युगमात्रभूभागन्यस्तदृष्टि[illegible] न त्वसमितो भवेत्, किमिति ? यतः केवली ब्रूयात्कर्मोपादानमेतद्, गमनक्रियायामसमितो हि प्राणिनः 'अभिहन्यात्' पादेन ताडयेत्, तथा 'वर्तयेत्' अन्यत्र पातयेत्, तथा 'परितापयेत्' पीडामुत्पादयेत्, 'अपद्रापयेद्वा' जीविताद्व्यपरोपयेदित्यत ईर्यासमितेन भवितव्यमिति प्रथमा भावना, द्वितीयभावनायां तु मनसा दुष्प्रणिहितेन न भाव्यं, तद्दर्शयति-यन्मनः 'पापकं' सावद्यं सक्रियम् 'अण्हयकरं'ति कर्माश्रवकारि, तथा छेदनभेदनकरं अधिकरणं कलहकरं प्रकृष्टदोषं प्रदोषिकं तथा प्राणिनां परितापकारीत्यादि न विधेयमिति, अथापरा तृतीया भावना-दुष्प्रसक्ता या वाक् प्राणिनामपकारिणी सा नाभिधातव्येति तात्पर्यार्थः, तथा चतुर्थी भावना-आदानभाण्डमात्रनिक्षेपणासमिति, तत्र च निर्ग्रन्थेन साधुना समितेन भवितव्यमिति, तथाऽपरा पञ्चमी भावना-'आलोकितं' प्रत्युपेक्षितशनादि भोक्तव्यं, तदकरणे दोषसम्भवादिति, इत्येवं पञ्चभिर्भावनाभिः प्रथमं व्रतं स्पर्शितं पालितं तीर्णं कीर्तितमवस्थितमाज्ञयाऽऽराधितं भवतीति ।

**मू. (५३७)** *अहावरं दुच्चं महव्वयं पच्चक्खामि, सव्वं मुसावायं वइदोसं, से कोहा वा लोहा वा भया वा हासा वा नेव सयं मुसं भासिज्जा नेवन्नेणं मुसं भासाविज्जा अन्नंपि मुसं भासंतं न समणुमन्निज्जा तिविहं तिविहेणं मनसा वयसा कायसा, तस्स भंते ! पडिक्कमामि जाव वोसिरामि, तस्सिमाओ पंच भावनाओ भवंति ।*

*तत्थिमा पढमा भावना—अनुवीइभासी से निग्गंथे नो अननुवीइभासी, केवली बूया०—अननुवीइभासी से निग्गंथे समावज्जिज्ज मोसं वयणाए, अनुवीइभासी से निग्गंथे नो अननुवीइभासित्ति पढमा भावना ।*

*अहावरा दुच्चा भावना—कोहं परियाणइ से निग्गंथे नो कोहणे सिया, केवली बूयाकोहपत्ते कोहत्तं समावइज्जा मोसं वयणाए, कोहं परियाणइ से निग्गंथे न य कोहणे सियत्ति दुच्चा भावना*

*अहावरा तच्चा भावना—लोभं परियाणइ से निग्गंथे नो अ लोभणए सिया, केवली बूया-लोभपत्ते लोभी समावइज्जा मोसं वयणाए, लोभं परियाणइ से निग्गंथे नो य लोभणए सियत्ति तच्चा भावना ।*

*अहावरा चउत्था भावना—भयं परिजाणइ से निग्गंथे नो भयभीरुए सिया, केवली बूया-भयपत्ते भीरू समावइज्जा मोसं वयणाए, भयं परिजाणइ से निग्गंथे नो भयभीरुए सिया चउत्था भावना ।*

*अहावरा पंचमा भावना—हासं परियाणइ से निग्गंथे नो य हासणए सिया, केव० हासपत्ते हासी समावइज्जा मोसं वयणाए, हासं परियाणइ से निग्गंथे नो हासणए सियत्ति पंचमी भावना*

*एतावता दोच्चे महव्वए सम्मं काएण फासिए जाव आणाए आराहिए यावि भवइ दुच्चे भंते ! महव्वए ॥*

**वृ.** द्वितीयव्रतभावनामाह, तत्र प्रथमेयम्-अनुविचिन्त्यभाषिणा भवितव्यं, तदकरणे दोष

सम्भवात्, द्वितीय भावनायां तु क्रोधः सदा परित्याज्यो, यतः क्रोधान्धो मिथ्याऽपि भाषत इति, तृतीयाभावनायां तु लोभजयः कर्त्तव्यः,तस्यापि मृषावादहेतुत्वादिति हृदयम्, चतुर्थ्यां पुनर्भयं त्याज्यं, पूर्वोक्तादेव हेतोरिति, पञ्चमभावनायां तु हास्यमिति, एवं पञ्चभिर्भावनाभिर्यावदाज्ञया-ऽऽराधितं भवतीति ।

**मू. (५३८)** *अहावरं तच्चं भंते! महव्वयं पच्चक्खामि सव्वं अदिन्नादाणं, से गामे वा नगरे वा रन्ने वा अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतं वा अचित्तमंतं वा नेव सयं अदिन्नं गिण्हिज्जा नेवन्नेहिं अदिन्नं गिण्हाविज्जा अदिन्नं अन्नंपि गिण्हंतं न समणुजाणिज्जा जावज्जीवाए जाव वोसिरामि, तस्सिमाओ पंच भावनाओ भवंति।*

*तत्थिमा पढमा भावना-अनुवीइ मिउग्गहं जाई से निग्गंथे नो अननुवीइमिउग्गहं जाई से निग्गंथे, केवली बूया-अननुवीइ मिउग्गहं जाई निग्गंथे अदिन्नं गिण्हेज्जा, अनुवीइ मिउग्गहं जाई से निग्गंथे णं अननुवीइ मिउग्गहं जाइत्ति पढमा भावणा।*

*अहावरा दुच्चा भावना-अनुन्नविय पाणभोयणभोई से निग्गंथे नो अननुन्नविअ पाणभोयणभोई, केवली बूया-अननुन्नविय पाणभोयणभोई से निग्गंथे अदिन्नं भुंजिज्जा, तम्हा अनुन्नविय पाणभोयणभोई से निग्गंथे नो अननुन्नविय पाणभोयणभोईत्ति दुच्चा भावना।*

*अहावरा तच्चा भावना-निग्गंथेणं उग्गहंसि उग्गहियंसि एतावताव उग्गहणसीलए सिया, केवली बूया-निग्गंथेणं उग्गहंसि अनुग्गहियंसि एतावता अनुग्गहणसीले अदिन्नं ओगिण्हिज्जा, निग्गंथेणं उग्गहं उग्गहियंसि एतावताव उग्गहणसीलएत्ति तच्चा भावना।*

*अहावरा चउत्था भावना-निग्गंथेणं उग्गहंसि उग्गहियंसि अभिक्खणं २ उग्गहणसीलए सिया, केवली बूया-निग्गंथेणं उग्गहंसि उ अभिक्खणं २ अनुग्गहणसीले अदिन्नं गिण्हिज्जा, निग्गंथे उग्गहंसि उग्गहियंसि अभिक्खणं २ उग्गहणसीलएत्ति चउत्था भावना।*

*अहावरा पंचमा भावना-अनुवीइ मिउग्गहजाई से निग्गंथे साहम्मिएसु, नो अननुवीइ मिउग्गहजाई, केवली बूया-अननुवीइ मिउग्गहजाई से निग्गंथे साहम्मिएसु अदिन्नं उगिण्हिज्जा अनुवीइमिउग्गहजाई से निग्गंथे साहम्मिएसु नो अननुवीइमिउग्गहजाती इइ पंचमा भावना।*

*एतावया तच्चे महव्वए सम्मं० जाव आणाए आराहए यावि भवइ, तच्चं भंते! महव्वयं।*

**वृ.** तृतीयव्रते प्रथमभावनैषा-अनुविचिन्त्य शुद्धोऽवग्रहो याचनीय इति, द्वितीयभावना त्वाचार्यादीननुज्ञाप्य भोजनादिकं विधेयम्, तृतीया त्वेषा-अवग्रहं गृह्णता निर्ग्रन्थेन साधुना परिमित एवावग्रहो ग्राह्य इति, चतुर्थभावनायां तु 'अभीक्ष्णम्' अनवरतमवग्रहपरिमाणं विधेयमिति, पञ्चम्यां त्वनुविचिन्त्य मितमवग्रहं साधर्मिकसम्बन्धिनं गृह्णीयात्, इत्येवमाज्ञया तृतीयव्रतमाराधितं भवतीति ।

**मू. (५३९)** *अहावरं चउत्थं महव्वयं पच्चक्खामि सव्वं मेहुणं, से दिव्वं वा माणुस्सं वा तिरिक्खजोणियं वा नेव सयं मेहुणं गच्छेज्जा तं चेवं अदिन्नादाणवत्तव्वया भाणियव्वा जाव वोसिरामि, तस्सिमाओ पंच भावनाओ भवंति।*

*तत्थिमा पढमा भावना-नो निग्गंथे अभिक्खणं २ इत्थीणं कहं कहित्तए सिया, केवली बूया-निग्गंथे णं अभिक्खणं २ इत्थीणं कहं कहेमाणे संतिभेया संतिविभंगा संतिकेवलीपन्नत्ताओ*

धम्माओ भंसिज्जा, नो निग्गंथे णं अभिक्खणं २ इत्थीणं कहं कहेमाणे संतिभेया संतिविभंगा संतिकेवलीपन्नत्ताओ धम्माओ भंसिज्जा, नो निग्गंथे णं अभिक्खणं २ इत्थीणं कहं कहित्तए सियत्ति पढमा भावना।

अहावरा दुच्चा भावना-नो निग्गंथे इत्थीणं मनोहराइं २ इंदियाइं आलोइत्तए निज्झाइत्तए सिया, केवली बूया-निग्गंथे णं इत्थीणं मनोहराइं २ इंदियाइं आलोएमाणे निज्झाएमाणे संतिभेया संतिविभंगा जाव धम्माओ भंसिज्जा, नो निग्गंथे इत्थीणं मनोहराइं २ इंदियाइं आलोइत्तए निज्झाइत्तए सियत्ति दुच्चा भावना।

अहावरा तच्चा भावना-नो निग्गंथे इत्थीणं पुव्वरयाइं पुव्वकीलियाइं सुमरित्तए सिया, केवली बूया-निग्गंथे णं इत्थीणं पुव्वरयाइं पुव्वकीलियाइं सरमाणे संतिभेया जाव भंसिज्जा, नो निग्गंथे इत्थीणं पुव्वरयाइं पुव्वकीलियाइं सरित्तए सियत्ति तच्चा भावना।

अहावरा चउत्था भावना-नाइमत्तपाणभोयणभोई से निग्गंथे न पणीयरसभोयणभोई से निग्गंथे, केवली बूया-अइमत्तपाणभोयणभोई से निग्गंथे पणियरसभोयणभोई संतिभेया जाव भंसिज्जा, नाइमत्तपाणभोयणभोई से निग्गंथे नो पणीयरसभोयणभोइत्ति चउत्था भावना।

अहावरा पंचमा भावणा-नो निग्गंथे इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्तए सिया, केवली बूया-निग्गंथे णं इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवेमाणे संतिभेया जाव भंसिज्जा, नो निग्गंथे इत्थीपसुपंडगसंसत्ताइं सयणासणाइं सेवित्तए सियत्ति पंचमा भावना ५,

एतावया चउत्थे महव्वए सम्मं काएण फासेइ जाव आराहिए यावि भवइ, चउत्थं भंते! महव्वयं॥

वृ. चतुर्थव्रते प्रथमेयम्-स्त्रीणां सम्बन्धिनीं कथां न कुर्यात्, द्वितीयायां तु तदिन्द्रियाणि मनोहारीणि नालोकयेत्, तृतीयायां तु पूर्वक्रीडितादि न स्मरेत्, चतुर्थ्यां नातिमात्रभोजनपानासेवी स्यात्, पञ्चम्यां तु स्त्रीपशुपण्डकविरहितशय्याऽवस्थानमिति।

मू. (५४०) अहावरं पंचमं भंते! महव्वयं सव्वं परिग्गहं पच्चक्खामि से अप्पं वा बहुं वा अणुं वा थूलं वा चित्तमंतमचित्तं वा नेव सयं परिग्गहं गिण्हिज्जा नेवन्नेहिं परिग्गहं गिण्हाविज्जा अन्नंपि परिग्गहं गिण्हंतं न समनुजाणिज्जा जाव वोसिरामि, तस्सिमाओ पंच भावनाओ भवंति।

तत्थिमा पढमा भावना-सोयओ णं जीवे मणुन्नाइं सद्दाइं सुणेइ मणुन्नामणुन्नेहिं सद्देहिं नो सज्जिज्जा नो रज्जिज्जा नो गिज्झेज्जा नो मुज्झिज्जा नो अज्झोववज्जिज्जा नो विणिघायमावज्जेज्जा, केवली बूया-निग्गंथे णं मणुन्नामणुन्नेहिं सद्देहिं सज्जमाणे रज्जमाणे जाव विणिघायमावज्जमाणे संतिभेया संतिविभंगा संतिकेवलिपन्नत्ताओ धम्माओ भंसिज्जास, न सक्का न सोउं सद्दा, सोतविसयमागया। रागदोसा उ जे तत्थ, ते भिक्खू परिवज्जए। सोयओ जीवे मणुन्नामणुन्नाइं सद्दाइं सुणेइ पढमा भावना।

अहावरा दुच्चा भावना-चक्खूओ जीवो मणुन्नामणुन्नाइं रूवाइं पासइ मणुन्नामणुन्नेहिं रूवेहिं सज्जमाणे जाव विणिघायमावज्जमाणे संतिभेया जाव भंसिज्जा,-न सक्का रूवमदट्ठुं, चक्खुविसयमागयं। रागदोसा उ जे तत्थ, ते भिक्खू परिवज्जए। चक्खूओ जीवो मणुन्ना २ रूवाइं पासइ, दुच्चा भावना।

*अहावरा तच्चा भावना—घाणओ जीवे मणुन्ना २ इं गंधाई अग्घायइ मणुन्नामणुन्नेहिं गंधेहिं नो सज्जिज्जा नो रज्जिज्जा जाव नो विणिघायमावज्जिज्जा केवली बूया-मणुन्नामणुन्नेहिं गंधेहिं सज्जमाणे जाव विणिघायमावज्जमाणे संतिभेया जाव भंसिज्जा,-न सक्का गंधमग्घाउं, नासाविसयमागयं। रागदोसा उ जे तत्थ, ते भिक्खू परिवज्जए। घाणओ जीवो मणुन्ना २ इं गंधाइं अग्घायइत्ति तच्चा भावना ३।*

*अहावरा चउत्था भावना—जिब्भाओ जीवो मणुन्ना २ इं रसाइं अस्साएइ, मणुन्नामणुन्नेहिं रसेहिं नो सज्जिज्जा जाव नो विणिघायमावज्जिज्जा, केवली बूया-निग्गंथे णं मणन्नामणुन्नेहिं रसेहिं सज्जमाणे जाव विणिघायमावज्जमाणे संतिभेया जाव भंसिज्जा,-न सक्का रसमस्साउं, जीहाविसयमागयं। रागद्दोसा उ जे तत्थ, ते भिक्खू परिवज्जए। जीहाओ जीवो मणुन्नाइं रसाइं अस्साएइत्ति चउत्था भावना।*

*अहावरा पंचमा भावना—फासओ जीवो मणुन्ना २ इं फासाइं पडिसेवेएइ मणुन्नामणुन्नेहिं फासेहिं नो सज्जिज्जा जाव नो विणिघायमावज्जिज्जा, केवली बूया-निग्गंथे णं मणुन्नामणुन्नेहिं फासेहिं सज्जमाणे जाव विणिघायमावज्जमाणे संतिभेया संतिविभंगा संतिकेवलीपन्नत्ताओ धम्माओ भंसिज्जा,-न सक्का फासमवेएउं, फासविसयमागयं। रागद्दोसा०। फासओ जीवो मणुन्ना २ इं फासाइं पडिसंवेएति पंचमा भावना।*

*एतावता पंचमे महव्वते सम्मं अवट्ठिए आणाए आराहिए यावि भवइ, पंचमं भंते! महव्वयं। इच्चेएहिं पंचमहव्वएहिं पणवीसाहि य भावणाहिं संपन्ने अनगारे अहासुयं अहाकप्पं अहामग्गं सम्मं काएण फासित्ता पालित्ता तीरित्ता किट्टित्ता आणाए आराहित्ता यावि भवइ॥*

वृ. पञ्चमव्रतभावना पुनरेषा-श्रोत्रमाश्रित्य मनोज्ञान् शब्दान् श्रुत्वा न तत्र गार्ध्यं विदध्यादिति, एवं द्वितीयतृतीयचतुर्थपञ्चमभावनासु यथाक्रमं रूपरसगन्धस्पर्शेषु गार्ध्यं न कार्यमिति, शेषं सुगमं यावदध्ययनं समाप्तमिति॥

चूडा-३ समाप्त।

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता शीलाङ्काचार्य विरचिता द्वीतीय श्रुतस्कन्धस्य तृतीया चूडायाः टीकापरिसमाप्ता**

## चूडा-४ "विमुक्ति"

वृ. उक्तं तृतीयचूडात्मकं भावनाख्यमध्ययनं, साम्प्रतं चतुर्थचूडारूपं विमुक्त्यध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरं महाव्रतभावनाः प्रतिपादिताः तदिहाप्यनित्यभावना प्रतिपाद्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि भवन्ति, *तत्रोपक्रमान्तर्गतमर्थाधिकारं दर्शयितुं निर्युक्तिकृदाह—*

नि. [३४५] अनिच्चे पव्वए रुप्पे भुयगस्स तहा महासमुद्दे य।
एए खलु अहिगारा अज्झयणंमी विमुत्तीए॥

वृ. अस्याध्ययनस्यानित्यत्वाधिकारः तथा पर्वताधिकारः पुना रूप्याधिकारः तथा भूजगत्वगधिकार एवं समुद्राधिकारश्च, इत्येते पञ्चार्थाधिकारास्तांश्च यथायोगं सूत्र एव भणिष्याम इति॥ नामनिष्पन्ने तु निक्षेपे विमुक्तिरिति नाम, अस्य च नामादिनिक्षेपः उत्तराध्ययनान्तःपातिविमोक्षाध्ययनवदित्यतिदेष्टुं निर्युक्तिकार आह—

नि. [३४६] जो चेव होइ मुक्खो सा उ विमुत्ति पगयं तु भावेणं।
देसविमुक्का साहू सव्वविमुक्का भवे सिद्धा ॥

वृ. य एव मोक्षः सैव विमुक्ति, अस्याश्च मोक्षवन्निक्षेप इत्यर्थ, प्रकृतम्-अधिकारो भावविमुक्त्येति, भावविमुक्तिस्तु देशसर्वभेदाद्द्वेधा, तत्र देशत साधूनां भवस्थकेवलिपर्यन्तानां, सर्वविमुक्तास्तु सिद्धा इति, [illegible] सूत्रानुगमे सूत्रमुच्चारयितव्यं, तच्चेदम्-

मू. (५४१) *अनिच्चमावाससमुविंति जंतुणो, पलोयए सुच्चमिणं अनुत्तरं।*
*विउसिरे विन्नु अगारबंधणं, अभीरु आरंभपरिग्गहं चए ॥*

वृ. आवसन्त्यस्मिन्नित्यावासो-मनुष्यादिभवस्तच्छरीरं वा तमनित्यमुप-सामीप्येन यान्ति-गच्छन्ति जन्तवः-प्राणिन इति, चतसृष्वपि गतिषु यत्र यत्रोत्पद्यन्ते तत्र तत्रानित्यभावमुपगच्छन्तीत्यर्थ, एतच्च मौनीन्द्रं प्रवचनमनुत्तरं श्रुत्वा 'प्रलोकयेत्' पर्यालोचयेद्, यथैव प्रवचनेऽनित्यत्वादिकमभिहितं तथैव लक्ष्यते-दृश्यते इत्यर्थ।

एतच्च श्रुत्वा प्रलोक्य च विद्वान् 'व्युत्सृजेत्' परित्यजेत् 'अगारबन्धनं' गृहपाशं पुत्रकलत्रधनधान्यादिरूपं, किम्भूतः सन्? इत्याह 'अभीरु' सप्तप्रकारभयरहितः परीषहोपसर्गाप्रधृष्यश्च 'आरम्भं' सावद्यमनुष्ठानं परिग्रहं च सबाह्याभ्यन्तरं त्यजेदिति साम्प्रतं पर्वताधिकारे,-

मू. (५४२) *तहागयं भिक्खुमनंतसंजयं, अनेलिसं विन्नु चरंतमेसणं।*
*तुदंति वायाहि अभिद्दवं नरा, सरेहिं संगामगयं व कुंजरं ॥*

वृ. तथाभूतं साधुम्-अनित्यत्वादिवासनोपेतं व्युत्सृष्टगृहबन्धनं त्यक्तारम्भपरिग्रहं, तथाऽनन्तेष्वेकेन्द्रियादिषु सम्यग् यतः संयतस्तम् 'अनीदृशम्' अनन्यसदृशं 'विद्वांसं' जिनागमगृहीतसारम् 'एषणायां चरन्तं' परिशुद्धाहारादिना वर्त्तमानं,तमित्थंभूतं भिक्षुं 'नरा' मिथ्यादृष्टयः पापोपहतात्मानः 'वाग्भि' असभ्यालापैः 'तुदन्ति' व्यथन्ते, पीडामुत्पादयन्तीत्यर्थ, तथा लोष्टप्रहारादिभिरभिद्रवन्ति च, कथमिति दृष्टान्तमाह-शरैः सङ्ग्रामगतं कुञ्जरमिव ॥ २ ॥ अपिच-

मू. (५४३) *तहप्पगारेहिं जणेहिं हीलिए, ससद्दफासा फरुसा उईरिया।*
*तितिक्खए नाणि अदुट्ठचेयसा, गिरिव्व वाएण न संपवेयए ॥*

वृ. 'तथाप्रकारैः' अनार्यप्रायैर्जनैः 'हीलितः' कदर्थितः, कथं?, यतस्तैः परुषास्तीव्राः सशब्दाः-साक्रोशाः स्पर्शा-शीतोष्णादिका दुःखोत्पादका उत्-प्राबल्येनेरिता-जनिताः कृता इत्यर्थ, तांश्च स मुनिरेवं हीलितोऽति 'तितिक्षते' सम्यक्सहते, यतोऽसौ 'ज्ञानी' पूर्वकृतकर्म एवायं विपाकानुभव इत्येवं मन्यमानः, 'अदुष्टचेताः' अकलुषान्तःकरणः सन् 'न तैः संप्रवेपते' न कम्पते गिरिरिव वातेनेति अधुना रूप्यदृष्टान्तमधिकृत्याह-

मू. (५४४) *उवेहमाणे कुसलेहिं संवसे, अकंतदुक्खी तसथावरा दुही।*
*अलूसए सव्वसहे महामुनी, तहा हि से सुस्समणे समाहिए ॥*

वृ. 'उपेक्षमाणः'परीषहोपसर्गान् सहमान इष्टानिष्टविषयेषु वोपेक्षमाणो-माध्यस्थ्यमवलम्बमानः 'कुशलैः' गीतार्थैः सहसंवसेदिति, कथम्?, अकान्तम्-अनभिप्रेतं दुःखम्-असातावेदनीयंतद्विद्यते येषां त्रसस्थावराणांतान् दुःखिनस्त्रसस्थावरान् 'अलूषयन्' अपरितापयन् पिहिताश्रवद्वारः पृथ्वीवत् 'सर्वंसहः' परीषहोपसर्गसहिष्णुः 'महामुनि' सम्यग्जगत्त्रयस्वभाववेत्ता तथा ह्यसौ सुश्रमण इति समाख्यातः किञ्च-

मू. (५४५) विऊ नए धम्मपयं अनुत्तरं, विणीयतण्हस्स मुणिस्स झायओ।
समाहियस्सऽग्गिसिहा व तेयसा, तवो य पन्ना य जसो य वड्ढइ ॥

वृ. 'विद्वान्' कालज्ञः 'नतः' प्रणतः प्रह्वः, किं तत् ?- 'धर्मपदं' क्षान्त्यादिकं, किंभूतम् ?-'अनुत्तरं' प्रधानमित्यर्थ,तस्य चैवंभूतस्य मुनेर्विगततृष्णस्य ध्यायतो धर्मध्यानं 'समाहितस्य' उपयुक्तस्याग्निशिखावत्तेजसा ज्वलतस्तपः प्रज्ञा यशश्च वर्द्धत इति तथा-

मू. (५४६) दिसोदिसंऽनंतजिणेण ताइणा, महव्वया खेमपया पवेइया।
महागुरू निस्सयरा उईरिया, तमेव तेउत्तिदिसं पगासगा ॥

वृ. 'दिशोदिश'मिति सर्वास्वप्येकेन्द्रियादिषु भावदिक्षु 'क्षेमपदानि' रक्षणस्थानानि 'प्रवेदितानि' प्ररूपितानि, अनन्तश्चासौ ज्ञानात्मतया नित्यतया वा जिनश्च-रागद्वेषजयनादनन्तजिनस्तेन, किंभूतानि व्रतानि ?-'महागुरूणि' कापुरुषैर्दुर्वहत्वात् 'निस्वकराणि' स्वं-कर्मानादिसम्बन्धात्तदपनयनसमर्थानि निस्वकराणि 'उदीरितानि' आविष्कृतानि तेजस इव तमोऽपनयनात्रिदिशं प्रकाशकानि, यथा तेजस्तमोऽपनीयोर्ध्वाधस्तिर्यक् प्रकाशते एवं तान्यपि कर्मतमोऽपनय- नहेतुत्वात्त्रिदिशं प्रकाशकानीति। मूलगुणानन्तरमुत्तरगुणाभिधित्सयाऽऽह-

मू. (५४७) सिएहिं भिक्खू असिए परिव्वए, असज्जमित्थीसु चइज्ज पूयणं।
अनिस्सिओ लोगमिणं तहा परं, न मिज्जई कामगुणेहिं पंडिए ॥

वृ. सिताः-बद्धाः कर्मणा गृहपाशेन रागद्वेषादिनिबन्धनेन वेति गृहस्था अन्यतीर्थिका वा तैः 'असितः' अबद्धः-तैः सार्द्धं सङ्गमकुर्वन् भिक्षु 'परिव्रजेत्' संयमानुष्ठायी भवेत्, तथा स्त्रीषु 'असजन्' सङ्गमकुर्वन् पूजनं त्यजेत्-न सत्काराभिलाषी भवेत्, तथा 'अनिश्रितः' असंबद्धः 'इहलोके' अस्मिन् जन्मनि तथा 'परलोके' स्वर्गादाविति, एवंभूतश्च 'कामगुणैः' मनोज्ञशब्दादिभिः 'न मीयते' न तोल्यते न स्वीक्रिय इतियावत् 'पण्डितः' कटुविपाककामगुणदर्शीति

मू. (५४८) तहा विमुक्कस्स परिन्नचारिणो, धिईमओ दुक्खखमस्स भिक्खुणो।
विसुज्झई जंसि मलं पुरेकडं, समीरियं रुप्पमलं व जोइणा ॥

वृ. 'तथा' तेन प्रकारेण मूलोत्तरगुणधारित्वेन विमुक्तो-निसङ्गस्तस्य, तया परिज्ञानं परिज्ञा-सदसद्विवेकस्तया चरितुं शीलमस्येति परिज्ञाचारी-ज्ञानपूर्वक्रियाकारी तस्य, तथा धृति-समाधानं संयमे यस्य स धृतिमांस्तस्य, दुःखम्-असातावेदनीयोदयस्तदुदीर्णं सम्यक् क्षमते-सहते, न वैक्लव्यमुपयाति नापि तदुपशमार्थं वैद्यौषधादि मृगयते, तदेवंभूतस्य भिक्षोः पूर्वोपात्तं कर्म 'विशुध्यति' अपगच्छति, किमिव ?-'समीरितं' प्रेरितं रूप्यमलमिव 'ज्योतिषा' अग्निनेति साम्प्रतं भुजङ्गत्वगधिकारमधिकृत्याह-

मू. (५४९) से हु परिन्नासमयंमि वट्टई, निराससे उवरय मेहुणा चरे।
भुयंगमे जुन्नतयं जहा चए, विमुच्चई से दुहसिज्ज माहणे ॥

वृ. 'स' एवंभूतो भिक्षुर्मूलोत्तरगुणधारी पिण्डैषणाध्ययनार्थकरणोद्युक्तः परिज्ञासमये वर्त्तते, तथा 'निराशंसः' ऐहिकामुष्मिकाशंसारहितः, तथा मैथुनादुपरतः, अस्य चोपलक्षणत्वादपरमहाव्रतधारी च, तदेवंभूतो भिक्षुर्यथा सर्प कञ्चुकं मुक्त्वा निर्मलीभवति एवं मुनिरपि 'दुःखशय्यातः' नरकादिभवाद्विमुच्यत इति। समुद्राधिकारमधिकृत्याह-

**मू. (५५०)** *जमाहु ओहं सलिलं अपारयं, महासमुद्दं व भुयाहि दुत्तरं।*
*अहे य णं परिजाणाहि पंडिए, से हु मुनी अंतकडेत्ति वुच्चई॥*

वृ. 'यं' संसारं समुद्रमिव भुजाभ्यां दुस्तरमाहुस्तीर्थकृतो गणधरादयो वा, किम्भूतम् ? – ओघरूपं, तत्र द्रव्यौघः सलिलप्रवेशो भावौघ आश्रवद्वाराणि, तथा मिथ्यात्वाद्यपारसलिलम्, इत्यनेनास्य दुस्तरत्वे कारणमुक्तम्, अथैनं संसारसमुद्रमेवंभूतं ज्ञपरिज्ञया सम्यग् जानीहि प्रत्याख्यानपरिज्ञया तु परिहर 'पण्डितः' सदसद्विवेकज्ञः, स च मुनिरेवंभूतः कर्मणोऽन्तकृदुच्यते अपिच–

**मू. (५५१)** *जहा हि बद्धं इह माणवेहिं, जहा य तेसिं तु विमुक्ख आहिए।*
*अहा तहा बन्धविमुक्ख जे विऊ, से हु मुनी अंतकडेत्ति वुच्चई॥*

वृ. 'यथा' येन प्रकारेण मिथ्यात्वादिना 'बद्धं' कर्म प्रकृतिस्थित्यादिनाऽऽत्मसात्कृतम् 'इह' अस्मिन् संसारे 'मानवैः' मनुष्यैरिति तथा यथा च सम्यग्दर्शनादिना तेषां कर्मणां विमोक्ष आख्यातः इत्येवं याथातथ्येन बन्धविमोक्षयोर्यः सम्यग्वेत्ता स मुनि कर्मणोऽन्तकृदुच्यते॥ किञ्च–

**मू. (५५२)** *इमंमि लोए परए य दोसुवि, न विज्जई बंधन जस्स किंचिवि।*
*से हु निरालंबणमप्पइट्ठिए, कलंकलीभावपहं विमुच्चइ॥*

वृ. अस्मिन् लोके परत्र च द्वयोरपि लोकयोर्न यस्य बन्धनं किञ्चनास्ति सः 'निरालम्बनः' ऐहिकामुष्मिकाशंसारहितः 'अप्रतिष्ठितः' न क्वचित्प्रतिबद्धोऽशरीरी वा स एवंभूतः 'कलंकलीभावात्' संसारगर्भादिपर्यटनाद्विमुच्यते॥ ब्रवीमीति पूर्ववत्।

चूडा-४ समाप्ताः

श्रुतस्कन्धः-२ समाप्तः

उक्तोऽनुगमः, साम्प्रतं नयाः, ते च ज्ञानक्रियनययोरवतरन्ति, तत्र ज्ञाननयः प्राह-यथा ज्ञानमेवैहिकामुष्मिकार्थावाप्तये, तदुक्तम्–

॥१॥ नायम्मि गिण्हिअव्वे अगिण्हिअव्वंमि चेव अत्थंमि।
जइअव्वमेव इइ जो उवएसो सो नओ नाम॥

यतितव्यमिति ज्ञान यत्नो विधेय इति य उपदेशः स नयो नामेति-स ज्ञाननयो नामेत्यर्थ कियानयस्त्विदमाह –

॥१॥ क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्।
यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत्॥

॥१॥ "शास्त्राण्यधीत्यापि भवन्ति मूर्खा, यस्तु क्रियावान् पुरुषः स विद्वान्।
संचिन्त्यतामौषधमातुरं हि, किं ज्ञानमात्रेण करोत्यरोगम् ?॥

तथा–नायमित्यादि, ज्ञातयोरपि ग्राह्यग्राहकयोरर्थयोस्तथाऽपि यतितव्यमेवेति क्रियैवाभ्यसनीयेति, इति यो नयः स क्रियानयो नामेति, एवं प्रत्येकमभिसन्धाय परमार्थोऽयं निरूप्यते- 'ज्ञानक्रियाभ्यांमोक्ष' इति, तथा चागमः–

॥१॥ "सव्वेसिंपि नयाणं बहुविहवत्तव्वंय निसामित्ता।
तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू॥

चरणं-क्रिया गुणो-ज्ञानं तद्वान् साधुर्मोक्षसाधनायालमिति तात्पर्यार्थ ॥

॥ १ ॥ आचारटीकाकरणे यदाप्तं, पुण्यं मया मोक्षगमैकहेतुः ।
तेनापनीयाशुभराशिमुच्चैराचारमार्गप्रवणोऽस्तु लोकः ॥

अन्त्येनिर्युक्तिगाथाः–

नि. [३४७] आयारस्स भगवओ चउत्थचूलाइ एस निज्जुत्ती ।
पंचमचूलनिसीहं तस्स य उवरिं भणीहामि ॥

नि. [३४८] सत्तहिंछहिं चउचउहि य पंचहि अट्ठचउहि नायव्वा ।
उद्देसएहिं पढमे सुयखंधे नव य अज्झयणा ॥

नि. [३४९] इक्कारस तिति दोदो दोदो उद्देसएहिं नायव्वा ।
सत्तयअट्ठयनवमा इक्कसरा हुंति अज्झयणा

इतिश्रीआचाराङ्गनिर्युक्ति :

नि. [३५०] पाहण्णे महसद्दो परिमाणे चेव होइ नायव्वो ।
पाहण्णे परिमाणे य छव्विहो होइ निक्खेवो ॥

नि. [३५१] दव्वे खेत्ते काले भावंमि य होंति या पहाणा उ ।
तेसि म हासद्दो खलु पाहण्णेणं तु निप्फन्नो ॥

नि. [३५२] दव्वे खेत्ते काले भावंमि य जे भवे महंता उ ।
तेसु महासद्दो खलु पमाणओ होंति निप्फन्नो ॥

नि. [३५३] दव्वे खेत्ते काले भावपरिण्णा य होइ बोद्धव्वा ।
जाणणओवयक्खणओ य दुविहा पुणेक्केक्का ॥

नि. [३५४] भावपरिण्णा दुविहा मूलगुणे चेव उत्तरगुणे य ।
मूलगुणे पंचविहा दुविहा पुण उत्तरगुणेसु ॥

नि. [३५५] पाहण्णेण उ पगयं परिण्णाएय तहय दुविहाए ।
परिण्णाणेसु पहाणे महापरिण्णा तओ होइ ॥

नि. [३५६] देवीणं मणुईणंतिरिक्खजोणीगयाण इत्थीणं ।
तिविहेण परिच्चाओ महापरिण्णाए निज्जुत्ती ॥

अविवृता निर्युक्तिरेषा महापरिज्ञायाः, अविवृता इत्यत्रोपन्यस्ताः ।

## १ प्रथमं अङ्गसूत्रं आचाराङ्गं परिसमाप्तम्

**मुनि दीपरत्न सागरेण संशोधिता सम्पादिता**
**आचाराङ्गसूत्रस्य शीलाङ्काचार्य विरचिता टीका परिसमाप्ता**

***